# ஸ்ரீவிஷ்ணு ஸஹஸ்ரநாம ஸ்தோத்ரம்

எக்காலந் தெந்தையாய் என்னுள் மன்னில் மற்று
எக்காலத்திலும் யாதொன்றும் வேண்டேன்
மிக்கார் வேத விமலர் விழுங்கும்
என் அக்கார க்னியே உனையானே

ஸ்ரீமாந் வேங்கடநாதார்ய கவிதார்க கேசரீ
வேதாந்தசார்ய வர்யோ மே ஸந்நிதத்தாம் ஸதா ஹ்ருதி

# श्रीविष्णुसहस्रनामस्तोत्रम्

# ஸ்ரீ விஷ்ணு ஸஹஸ்ரநாம ஸ்தோத்ரம்

॥ श्रीहरिः ॥

# ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ २ ॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ३ ॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ ४ ॥

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥ ५ ॥

नमः समस्तभूतानामादिभूताय भूभृते ।
अनेकरूपरूपाय विष्णवे प्रभविष्णवे ॥ ६ ॥

श्रीवैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ ७ ॥

युधिष्ठिर उवाच—

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ ८ ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ९ ॥

श्रीभीष्म उवाच—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ १० ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ ११ ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ १२ ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ १३ ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ १४ ॥
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ १५ ॥

पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १६ ॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ १७ ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १८ ॥
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १९ ॥
ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥ २० ॥
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥ २१ ॥
विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥ २२ ॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमहामन्त्रस्य । श्रीवेदव्यासो भगवानृषिः । अनुष्टुप् छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो भानुरिति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः ।

त्रिसामा सामगः सामेति हृदयम् । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणि-रक्षोभ्य इति कवचम् । उद्भवः क्षोभणो देव इति परमो मन्त्रः । श्रीमहाविष्णुप्रीत्यर्थे जपे विनियोगः ।

विश्वं विष्णुर्वषट्कार इत्यंगुष्ठाभ्यां नमः । अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः । ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेति मध्यमाभ्यां नमः । सुवर्णबिन्दुरक्षोभ्य इत्यनामिकाभ्यां नमः । निमिषोऽनिमिषः स्रग्वीति कनिष्ठिकाभ्यां नमः । रथाङ्गपाणिरक्षोभ्य इति करतलकर-पृष्ठाभ्यां नमः । सुव्रतः सुमुखः सूक्ष्मेति ज्ञानाय हृदयाय नमः । सहस्रमूर्धा विश्वात्मेति ऐश्वर्याय शिरसे स्वाहा । सहस्रार्चिः सप्तजिह्वेति शक्त्यै शिखायै वषट् । त्रिसामा सामगः सामेति बलाय कवचाय हुम् । रथाङ्गपाणिरक्षोभ्य इति तेजसे नेत्रत्रयाय वौषट् । शार्ङ्गधन्वा गदाधर इति वीर्याय अस्त्राय फट् । ऋतुः सुदर्शनः काल इति भूर्भुवः सुवरोम् इति दिग्बन्धः ।

ध्यानम्—

क्षीरोदन्वत्प्रदेशे शुचिमणि-
विलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिक-
मणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरि-
विरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नः पुनीयादरि-
नलिनगदाशङ्खपाणिर्मुकुन्दः ॥

भूः पादौ यस्य नाभिर्वियद-
सुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि
दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनर-
खगगो भोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवन-
वपुषं विष्णुमीशं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

मेघश्यामं पीतकौशेयवासं
श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं
वन्दे विष्णुं सर्वलोकैकनाथम् ॥

सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षःस्थलकौस्तुभश्रियं
नमामि विष्णुं शिरसा चतुर्भुजम् ॥

छायायां पारिजातस्य हेमसिंहासनोपरि ।
आसीनमम्बुदश्याममायताक्षमलंकृतम् ॥
चन्द्राननं चतुर्बाहुं श्रीवत्सांकितवक्षसम् ।
रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये ॥

ओं विश्वस्मै नमः ॥

विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद् भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ २ ॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥ ३ ॥

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
संभवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ ८ ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ ९ ॥

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥ ११ ॥

वसुर्वसुमनाः सत्यः समात्माऽसंमितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः ॥ १३ ॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ १४ ॥

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥ १७ ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥

महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥ २० ॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥

अमृत्युः सर्वदृक् सिंहः संधाता संधिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥

आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥

सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥

असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥ २७ ॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ २८ ॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥

इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ३७ ॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८ ॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९ ॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ४० ॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ ४२ ॥

रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥

विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥

अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥

धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ ५१ ॥

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ ५३ ॥

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसंधो दाशार्हः सात्त्वतां पतिः ॥ ५४ ॥

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥

वेधाः स्वाङ्गोऽजित कृष्णो दृढः संकर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥

भगवान् भगहानन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवःस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥ ६२ ॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ६५ ॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्माऽविधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥

कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६९ ॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥

समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ ८५ ॥

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।
अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ ८७ ॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥ ८८ ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ ८९ ॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥ ९० ॥

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९१ ॥

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ताऽनियमोऽयमः ॥ ९२ ॥

सत्त्ववान्सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥ ९३ ॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥

अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥

सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥ ९६ ॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनं पर्यवस्थितः ॥ ९९ ॥

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥

आधारनिलयोऽधाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥

भूर्भुवस्स्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १०४ ॥

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः
यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १०५ ॥

आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

सर्वप्रहरणायुध ओं नम इति ॥

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥ १ ॥

श्रीवासुदेवोऽभिरक्षत्वों नम इति ॥

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ २ ॥

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किंचित्सोऽमुत्रेह च मानवः ॥ ३ ॥

वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ ४ ॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ॥ ५ ॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥ ६ ॥

यशः प्राप्नोति विपुलं याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥ ७ ॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ ८ ॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ ९ ॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १० ॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ ११ ॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १२ ॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १४ ॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १५ ॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १६ ॥

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १७ ॥

सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १८ ॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १९ ॥

योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ २० ॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीँल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ २१ ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ २२ ॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥ २३ ॥

न ते यान्ति पराभव ओं नम इति ॥

अर्जुन उवाच—

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥ २४ ॥

श्रीभगवानुवाच—

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥ २५ ॥

स्तुत एव न संशय ओं नम इति ॥

व्यास उवाच—

वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥ २६ ॥

श्रीवासुदेव नमोऽस्तु त ओं नम इति ॥

पार्वत्युवाच—

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥ २७ ॥

ईश्वर उवाच—

श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनामतस्तुल्यं रामनाम वरानने ॥ २८ ॥

श्रीरामनाम वरानन ओं नम इति ॥

ब्रह्मोवाच—

नमोऽस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटियुगधारिणे नमः ॥ २९ ॥

सहस्रकोटियुगधारिणे नम ओं नम इति ॥

संजय उवाच—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ३० ॥

श्रीभगवानुवाच—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २१ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ २२ ॥

आर्ता विषण्णाः शिथिलाश्च भीता
घोरेषु च व्याधिषु वर्तमानाः ।
संकीर्त्य नारायणशब्दमात्रं
विमुक्तदुःखाः सुखिनो भवन्तु ॥ २३ ॥

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ १ ॥

आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम् ।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ॥ २ ॥

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ ॥ ३ ॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन् ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ॥ ४ ॥

नमः कोदण्डहस्ताय सन्धीकृतशाराय च ।
खण्डिताखिलदैत्याय रामायापन्निवारिणे ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥

अच्युतानन्त-गोविन्द-नामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ७ ॥

अच्युतानन्त गोविन्द विष्णो नारायणामृत ।
रोगान्मे नाशयाशेषानाशु धन्वन्तरे हरे ॥ ८ ॥

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेश वासुदेव नमोस्तु ते ॥ ९ ॥

श्रीकृष्ण विष्णो नृहरे मुरारे
प्रद्युम्न संकर्षण वासुदेव ।
अजानिरुद्धामल विश्वरूप
त्वं पाहि नः सर्वभयादजस्रम् ॥ १० ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः ॥ ११ ॥

यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते ॥ १२ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥

इति श्री महाभारते शतसहस्रिकायां संहितायां
वैयासिक्याम् आनुशासनिक-पर्वणि श्रीभीष्म-युधिष्ठिर संवादे
श्री विष्णुसहस्रनाम स्तोत्रं सम्पूर्णम् ।

॥ ॐ तत् सत् ॥

ஶ்ரீ:


# ஶ்ரீ விஷ்ணுஸஹஸ்ரநாம ஸ்தோத்ரம்

ஶ்ரீ விஷ்ணவே நம:
ஹரி:ஓம்

ஶுக்லாம்பரதரம் விஷ்ணும் ஶஶிவர்ணம் சதுர்புஜம் ।
ப்ரஸந்நவதநம் த்யாயேத் ஸர்வவிக்நோபஶாந்தயே ॥

வ்யாஸம் வஸிஷ்டநப்தாரம் ஶக்தே: பௌத்ரமகல்மஷம் ।
பராஶராத்மஜம் வந்தே ஶுகதாதம் தபோநிதிம் ॥

வ்யாஸாய விஷ்ணு ரூபாய வ்யாஸ ரூபாய விஷ்ணவே ।
நமோ வை ப்ரஹ்மநிதயே வாஸிஷ்டாய நமோ நம: ॥

அவிகாராய ஶுத்தாய நித்யாய பரமாத்மநே ।
ஸதைகரூபரூபாய விஷ்ணவே ஸர்வ ஜிஷ்ணவே ॥

யஸ்ய ஸ்மரண மாத்ரேண ஜன்மஸம்ஸாரபந்தநாத் ।
விமுச்யதே நமஸ் தஸ்மை விஷ்ணவே ப்ரபவிஷ்ணவே ॥

நம: ஸமஸ்த பூதாநாம் ஆதி பூதாய பூப்ருதே ।
அநேக ரூபரூபாய விஷ்ணவே ப்ரபவிஷ்ணவே ॥

ஶ்ரீவைஶம்பாயந உவாச—
ச்ருத்வா தர்மாநஶேஷேண பாவநாநி ச ஸர்வஸ: ।
யுதிஷ்டிர: ஶாந்தநவம் புநரேவாப்யபாஷத ॥

யுதிஷ்டிர உவாச—

கிமேகம் தைவதம் லோகே கிம் வாப்யேகம் பராயணம் ।
ஸ்துவந்த: கம் கமர்ச்சந்த: ப்ராப்நுயுர் மாநவாஸ்ஸுபம் ॥

கோ தர்ம: ஸர்வ தர்மாணாம் பவத: பரமோ மத: ।
கிம் ஜபந் முச்யதே ஜந்துர் ஜந்மஸம்ஸார பந்தநாத் ॥

ஸ்ரீபீஷ்ம உவாச—

ஜகத்ப்ரபும் தேவதேவம் அநந்தம் புருஷோத்தமம் ।
ஸ்துவந்நாம ஸஹஸ்ரேண புருஷ: ஸததோதத்தித: ॥

தமேவ சார்ச்சயந் நித்யம் பக்த்யா புருஷமவ்யயம் ।
த்யாயந் ஸ்துவந் நமஸ்யம்ஸ்ச யஜமாநஸ்தமேவ ச ॥

அநாதிநிதநம் விஷ்ணும் ஸர்வலோக மஹேச்வரம் ।
லோகாத்யக்ஷம் ஸ்துவந்நித்யம் ஸர்வதுக்கா திகோ பவேத் ॥

ப்ரஹ்மண்யம் ஸர்வதர்மஜ்ஞம் லோகாநாம் கீர்த்திவர்த்தநம் ।
லோகநாதம் மஹத்பூதம் ஸர்வபூதபவோத்பவம் ॥

ஏஷ மே ஸர்வதர்மாணாம் தர்மோ திகதமோ மத: ।
யத் பக்த்யா புண்டரீகாக்ஷம் ஸ்தவைரர்ச்சேந் நரஸ்ஸதா ॥

பரமம் யோ மஹத்தேஜ: பரமம் யோ மஹத்தப: ।
பரமம் யோ மஹத் ப்ரஹ்ம: பரமம் ய: பராயணம் ॥

பவித்ராணாம் பவித்ரம் யோ மங்களாநாம் ச மங்களம் ।
தைவதம் தேவதாநாம் ச பூதாநாம் யோऽவ்யய: பிதா ॥

யத ஸர்வாணி பூதாநி பவந்த்யாதி யுகாகமே ।
யஸ்மிம்ஸ் ச ப்ரளயம் யாந்தி புநரவே யுகக்ஷயே ॥

தஸ்ய லோகப்ரதாநஸ்ய ஜகந்நா தஸ்ய பூபதே ।
விஷ்ணோர் நாம ஸஹஸ்ரம் மே ச்ருணு பாபபயாபஹம் ॥

யாநி நாமாநி கௌணாநி விக்யாதாநி மஹாத்மந: ।

ரிஷிபி: பரிகீதாநி தாநி வக்ஷ்யாமி பூதயே ॥

ரிஷிர் நாம்நாம் ஸஹஸ்ரஸ்ய வேதவ்யாஸோ மஹாமுனி: ।
ச்சந்தோऽநுஷ்டுப் ததா தேவோ பகவாந் தேவகீஸுத: ॥

அம்ருதாம்ஸூத்பவோ பீஜம் ஶக்திர் தேவகிநந்தந:
த்ரிஸாமா ஹ்ருதயம் தஸ்ய ஶாந்த்யர்த்தே விநியுஜ்யதே

விஷ்ணும் ஜிஷ்ணும் மஹாவிஷ்ணும் ப்ரபவிஷ்ணும் மஹேச்வரம்
அநேகரூப தைத்யாந்தம் நமாமி புருஷோத்தமம்

அஸ்ய ஶ்ரீ விஷ்ணோர் திவ்ய ஸஹஸ்ரநாம ஸ்தோத்திர
மஹா மந்த்ரஸ்ய ஶ்ரீ வேதவ்யாஸோ பகவாந்ரிஷி:
அநுஷ்டுப் சந்த: ஶ்ரீ மஹாவிஷ்ணு பரமாத்மா
ஶ்ரீமந்நாராயணோ தேவதா

அம்ருதாம் ஶூத்பவோ பாநுரிதி பீஜம்
தேவகீ நந்தந: ஸ்ரஷ்டேதி ஶக்தி:
த்ரிஸாமா ஸாமகஸ் ஸாமேதி ஹ்ருதயம்
சங்க ப்ருந்நந்தகீ சக்ரீ தி கீலகம் ।
சார்ங்கதந்வா கதாதர இத்யஸ்தரம்
ரதாங்கபாணிரக்ஷோப்ய இதி கவசம்
உத்பவ: க்ஷோபணோ தேவ இதி பரமோ மந்த்ர:
ஶ்ரீமஹாவிஷ்ணு ப்ரீத்யர்த்தே ஜபே விநியோக: ॥

விச்வம் விஷ்ணுர் வஷட்கார
இதி அங்குஷ்டாப்யாம் நம:
அம்ருதாம் சூத்பவோ பானுரிதி
தர்ஜநீப்யாம் நம:
ப்ரஹ்மண்யோ ப்ரஹ்மகிருத் ப்ரும்ஹேதி
மத்யமாப்யாம் நம:
ஸ்வர்ண பிந்து ரக்ஷோப்ய
இதி அநாமிகாப்யாம் நம:

நிமிஷோ அநிமிஷ: ஸ்ரக்வீ
கநிஷ்டிகாப்யாம் நம:
ரதாங்கபாணி ரக்ஷோப்ய
இதி கரதலகர ப்ருஷ்டாப்யாம் நம:
ஸுவ்ரத: ஸுமுக: ஸூக்ஷ்மேதி
ஞாநாய ஹ்ருதயாய நம:
ஸஹஸ்ர மூர்த்தா விச்வாத்மேதி
ஐச்வர்யாயசிரஸே ஸ்வாஹா
ஸஹஸ்ரார்சி: ஸப்தஜிஹ்வேதி
ஶக்த்யை ஶிகாயை வஷட்
திரிஸாமா ஸாமக: ஸாமேதி
பலாய கவசாய ஹும்
ரதாங்கபாணி ரக்ஷோப்ய
இதி தேஜஸே நேத்ரத்ரயாய வௌஷட்
சார்ங்கதன்வா கதாதர
இதி வீர்யாய அஸ்த்ராய பட்
ருது: ஸுதர்சன: கால
இதி பூர்புவஸ்ஸுவரோம் இதி திக்பந்த:

## த்யாநம்

க்ஷீரோதந்வத் ப்ரதேஶே ஶுசிமணிவிலஸத்
ஸைகதே மௌக் திகாநாம்
மாலாக்லுப்தாஸநஸ்த: ஸ்படிகமணி நிபைர்
மௌத்திகைர் மண்டிதாங்க: ।

சுப்ரைரப்ரை ரதப்ரை
ருபரி விரசிதைர் முக்தபீயூஷ வர்ஷை:
ஆநந்தீ ந: புநீயா தரிநளிநகதா
சங்கபாணிர் முகுந்த: ॥

பூ பாதௌ யஸ்ய நாபிர் வியதஸுரநிலஸ்
சந்த்ரஸூர்யௌ ச நேத்ரே
கர்ணுவாசா ஶிரோ த்யௌர் முகமபி தஹநோ
யஸ்ய வாஸ்தேயமப்தி: ।

அந்தஸ்தம் யஸ்ய விச்வம் ஸுர நர ககோ
போகிகந்தர்வ தைத்யை:
சித்ரம் ரம் ரம்யதே தம் த்ரிபுவந வபுஷம்
விஷ்ணுமீஶம் நமாமி ॥

ஶாந்தாகாரம் புஜகஶயநம்
பத்மநாபம் ஸுரேஶம்
விச்வாகாரம் ககந ஸத்ருஶம்
மேகவர்ணம் ஶுபாங்கம் ।

லக்ஷ்மீ காந்தம் கமலநயநம்
யோகிஹ்ருத் த்யாந கம்யம்
வந்தே விஷ்ணும் பவபயஹரம்
ஸர்வலோகைக நாதம் ॥

மேகச்யாமம் பீதகௌஶேயவாஸம்
ஸ்ரீவத்ஸாங்கம் கௌஸ்துபோத்பாஸிதாங்கம் ।
புண்யோபேதம் புண்டரீகாயதாக்ஷம்
விஷ்ணும் வந்தே ஸர்வலோகைகநாதம் ॥

ஸஶங்க சக்ரம் ஸகிரீட குண்டலம்
ஸபீதவஸ்த்ரம் ஸரஸீருஹேக்ஷணம் ।
ஸஹாரவக்ஷஸ்தல கௌஸ்துப ச்ரியம்
நமாமி விஷ்ணும் ஶிரஸா சதுர்புஜம் ॥

சாயாயாம் பாரிஜாதஸ்ய ஹேமஸிம்ஹாஸநோபரி ।
ஆஸீந மம்புதச்யாமம் ஆயதாக்ஷமலங்க்ருதம் ॥

சந்த்ராநநம் சதுர்பாஹும் ஸ்ரீவத்ஸாங்கித வக்ஷஸம் ।
ருக்மணீ ஸத்யபாமாப்யாம் ஸஹிதம் க்ருஷ்மாச்ரயே ॥

ஓம் விச்வஸ்மை நம:

ஹரி: ஓம்

விச்வம் விஷ்ணுர் வஷட்காரோ பூதபவ்ய பவத் ப்ரபு: ।
பூதக்ருத் பூதப்ருத் பாவோ பூதாத்மா பூதபாவந ॥

பூதாத்மா பரமாத்மா ச முக்தாநாம் பரமா கதி: ।
அவ்யய: புருஷஸ்ஸாக்ஷீ க்ஷேத்ரஜ்ஞோऽக்ஷர ஏவ ச ॥

யோகோ யோகவிதாம் நேதா ப்ரதாநபுருஷேச்வர: ।
நாரஸிம்ஹபுஸ் ஸ்ரீமாந் கேஶவ: புருஷோத்தம: ॥

ஸர்வஸ் ஶர்வஸ்ஶிவஸ்தாணுர் பூதாதிர் நிதிரவ்யய: ।
ஸம்பவோ பாவநோ பர்த்தா ப்ரபவ: ப்ரபுரீச்வர: ॥

ஸ்வயம்பூஸ் ஶம்புராதித்ய: ப்ஷ்கராக்ஷோ மஹாஸ்வந: ।
அநாதிநிதநோ தாதா விதா தா தாதுருதத்ம: ॥

அப்ரமேயோ ஹ்ருஷீகேஶ: பத்மநாபோऽமரப்ரபு: ।
விச்வர்மா மநுஸ்த்வஷ்ட: ஸ்தவிஷ்ட ஸ்தவிரோ த்ருவ: ॥

அக்ராஹ்யஸ் ஶாச்வத க்ருஷ்ணோ லோஹிதாக்ஷ: ப்ரதர்தந: ।
ப்ரபுதஸ் த்ரிககுப்தாம பவித்ரம் மங்களம் பரம் ॥

ஈஶாந: ப்ராணத: ப்ராணோ ஜ்யேஷ்ட ச்ரேஷ்ட: ப்ராஜாபதி: ।
ஹிரண்யகர்ப்போ பூகர்ப்போ மாதவோ மதுஸூதந: ॥

ஈச்வரோ விக்ரமீ தந்வீ மேதாவீ விக்ரம: க்ரம: ।
அநுத்தமோ துராதர்ஷ: க்ருதஜ்ஞ: க்ருதிராத்மந: ॥

ஸுரேஶ ஶரணம் ஶர்ம விச்வரேதா ப்ரஜாபவ: ।
அஹஸ் ஸம்வத்ஸரோ வ்யாள: ப்ரத்யயஸ் ஸர்வதர்சந: ॥

அஜஸ் ஸர்வேச்ரயஸ் ஸித்தஸ் ஸித்தி: ஸர்வாதிரச்யுத: ।
வ்ருஷாகபி: ரமேயாத்மா.ஸர்வயோக விநிஸ்ருத ॥

வஸுர் வஸுமநாஸ் ஸத்யஸ் ஸமாத்மா ஸம்மிதஸ்ஸம: ।
அமோக: புண்டரீகாக்ஷோ வ்ருஷகர்மா வ்ருஷாக்ருதி: ॥

ருத்ரோ பஹுஶிரா பப்ருர் விச்வயோநிஶ்ஶுசிஶ்ரவா: ।
அம்ருத: ஶாச்வதஸ் ஸ்தாணுர் வராரோஹோ மஹாதபா: ॥

ஸர்வகஸ் ஸர்வவித்பாநுர் விஷ்வக்ஸேநோ ஜநார்தந: ।
வேதோ வேதவிதவ்யங்கோ வேதாங்கோ வேதவித் கவி: ॥

லோகாத்யக்ஷஸ் ஸுராத்யக்ஷோ தர்மாத்யக்ஷ: க்ருதாக்ருத: ।
சதுராத்மா சதுர்வ்யூஹஸ் சதுர் தம்ஷ்ட்ரஸ் சதுர்புஜ: ॥

ப்ராஜிஷ்ணுர் போஜநம் போக்தா ஸஹிஷ்ணுர் ஜகதாதிஜ: ।
அநகோ விஜயோ ஜேதா விச்வயோநி: புநர்வஸு: ॥

உபேந்த்ரோ வாமந: ப்ராம்ஶு அமோகஸ் ஶுசிரூர்ஜித: ।
அதீந்த்ரஸ் ஸங்க்ரஹஸ் ஸர்கோ த்ருதாத்மா நியமோ யம: ॥

வேத்யோ வைத்யஸ் ஸதாயோகீ வீரஹா மாதவோ மது: ।
அதீந்த்ரியோ மஹாமாயோ மஹோத்ஸாஹோ மஹாபல: ॥

மஹாபுத்திர் மஹாவீர்யோ மஹாஶக்திர் மஹாத்யுதி: ।
அநிர்தேச்யவபு: ஸ்ரீமாநமேயாத்மா மஹாத்ரி த்ருக் ॥

மஹேஷ்வாஸோ மஹீபர்த்தா ஸ்ரீநிவாஸஸ் ஸதாம் கதி: ।
அநிருத்தஸ் ஸுராநந்தோ கோவிந்தோ கோவிதாம் பதி ॥

மரீசிர் தமநோ ஹம்ஸஸ் ஸுபர்ணோ புஜகோத்தம: ।
ஹிரண்யநாபஸ்ஸுதபா: பத்மநாப: ப்ரஜாபதி: ॥

அம்ருத்யுஸ் ஸர்வத்ருக் ஸிம்ஹஸ் ஸந்தாதா ஸந்திமாந்ஸ்திர: ।
அஜோதுர்மர்ஷணச் ஶாஸ்தா விச்ருதாத்மா ஸுராரிஹா ॥

குருர் குருதமோ தாம ஸத்யஸ் ஸத்யபராக்ரம: ।
நிமிஷோऽநிமிஷஸ் ஸ்ரக்வீ வாசஸ்பதி ருதாரதீ: ॥

அக்ரணீர் க்ராமணீ: ஸ்ரீமாந் ந்யாயோ நேதா ஸமீரண: ।
ஸஹஸ்ரமூர்த்தா விச்வாத்மா ஸஹஸ்ராக்ஷஸ் ஸஹஸ்ரபாத் ॥

ஆவர்த்தநோ நிவ்ருத்தாத்மா ஸம்வ்ருதஸ் ஸம்ப்ரமர்தந: ।
அஹஸ்ஸம்வர்த்தகோ வஹ்நி ரநிலோ தரணீதர: ॥

ஹரி: ஓம்

விச்வம் விஷ்ணுர் வஷட்காரோ பூதபவ்ய பவத் ப்ரபு: ।
பூதக்ருத் பூதப்ருத் பாவோ பூதாத்மா பூதபாவந ॥

பூதாத்மா பரமாத்மா ச முக்தாநாம் பரமா கதி: ।
அவ்யய: புருஷஸ்ஸாக்ஷீ க்ஷேத்ரஜ்ஞோऽக்ஷர ஏவ ச ॥

யோகோ யோகவிதாம் நேதா ப்ரதாநபுருஷேச்வர: ।
நாரஸிம்ஹபுஸ் ஸ்ரீமாந் கேஶவ: புருஷோத்தம: ॥

ஸர்வஸ் ஶர்வஸ்ஶிவஸ்தாணுர் பூதாதிர் நிதிரவ்யய: ।
ஸம்பவோ பாவநோ பர்த்தா ப்ரபவ: ப்ரபுரீச்வர: ॥

ஸ்வயம்பூஸ் ஶம்புராதித்ய: புஷ்கராக்ஷோ மஹாஸ்வந: ।
அநாதிநிதநோ தாதா விதா தா தாதுருதத்ம: ॥

அப்ரமேயோ ஹ்ருஷீகேஶ: பத்மநாபோऽமரப்ரபு: ।
விச்வர்மா மநுஸ்த்வஷ்ட: ஸ்தவிஷ்ட ஸ்தவிரோ த்ருவ: ॥

அக்ராஹ்யஸ் ஶாச்வத க்ருஷ்ணோ லோஹிதாக்ஷ: ப்ரதர்தந: ।
ப்ரபுதஸ் த்ரிககுப்தாம பவித்ரம் மங்களம் பரம் ॥

ஈஶாந: ப்ராணத: ப்ராணோ ஜ்யேஷ்ட ச்ரேஷ்ட: ப்ராஜாபதி: ।
ஹிரண்யகர்ப்போ பூகர்ப்போ மாதவோ மதுஸூதந: ॥

ஈச்வரோ விக்ரமீ தந்வீ மேதாவீ விக்ரம: க்ரம: ।
அநுத்தமோ துராதர்ஷ: க்ருதஜ்ஞ: க்ருதிராத்மந: ॥

ஸுரேஶ ஶரணம் ஶர்ம விச்வரேதா ப்ரஜாபவ: ।
அஹஸ் ஸம்வத்ஸரோ வ்யாள: ப்ரத்யயஸ் ஸர்வதர்சந: ॥

அஜஸ் ஸர்வேச்ரயஸ் ஸித்தஸ் ஸித்தி: ஸர்வாதிரச்யுத: ।
வ்ருஷாகபி: ரமேயாத்மா ஸர்வயோக விநிஸ்ருத ॥

வஸுர் வஸுமநாஸ் ஸத்யஸ் ஸமாத்மா ஸம்மிதஸ்ஸம: ।
அமோக: புண்டரீகாக்ஷோ வ்ருஷகர்மா வ்ருஷாக்ருதி: ॥

ருத்ரோ பஹுஶிரா பப்ருர் விச்வயோநிஸ்ஶுச் சிரவா: ।
அம்ருத: ஶாச்வதஸ் ஸ்தாணுர் வராரோஹோ மஹாதபா: ॥

ஸர்வகஸ் ஸர்வவித்பாநுர் விஷ்வக்ஸேநோ ஜநார்தந: ।
வேதோ வேதவிதவ்யங்கோ வேதாங்கோ வேதவித் கவி: ॥

லோகாத்யக்ஷஸ் ஸுராத்யக்ஷோ தர்மாத்யக்ஷ: க்ருதாக்ருத: ।
சதுராத்மா சதுர்வ்யூஹஸ் சதுர் தம்ஷ்ட்ரஸ் சதுர்புஜ: ॥

ப்ராஜிஷ்ணுர் போஜநம் போக்தா ஸஹிஷ்ணுர் ஜகதாதிஜ: ।
அநகோ விஜயோ ஜேதா விச்வயோநி: புநர்வஸு: ॥

உபேந்த்ரோ வாமந: ப்ராம்ஶு அமோகஸ் ஶுசிரூர்ஜித: ।
அதீந்த்ரஸ் ஸங்க்ரஹஸ் ஸர்கோ த்ருதாத்மா நியமோ யம: ॥

வேத்யோ வைத்யஸ் ஸதாயோகீ வீரஹா மாதவோ மது: ।
அதீந்த்ரியோ மஹாமாயோ மஹோத்ஸாஹோ மஹாபல: ॥

மஹாபுத்திர் மஹாவீர்யோ மஹாஶக்திர் மஹாத்யுதி: ।
அநிர்தேச்யவபு: ஶ்ரீமாநமேயாத்மா மஹாத்ரி த்ருக் ॥

மஹேஷ்வாஸோ மஹீபர்த்தா ஶ்ரீநிவாஸஸ் ஸதாம் கதி: ।
அநிருத்தஸ் ஸுராநந்தோ கோவிந்தோ கோவிதாம் பதி ॥

மரீசிர் தமநோ ஹம்ஸஸ் ஸுபர்ணோ புஜகோத்தம: ।
ஹிரண்யநாபஸ்ஸுதபா: பத்மநாப: ப்ரஜாபதி: ॥

அம்ருத்யுஸ் ஸர்வத்ருக் ஸிம்ஹஸ் ஸந்தாதா ஸந்திமாந்ஸ்திர: ।
அஜோதுர்மர்ஷணச் ஶாஸ்தா விச்ருதாத்மா ஸுராரிஹா ॥

குருர் குருதமோ தாம ஸத்யஸ் ஸத்யபராக்ரம: ।
நிமிஷோऽநிமிஷஸ் ஸ்ரக்வீ வாசஸ்பதி ருதாரதீ: ॥

அக்ரணீர் க்ராமணீ: ஶ்ரீமாந் ந்யாயோ நேதா ஸமீரண: ।
ஸஹஸ்ரமூர்த்தா விச்வாத்மா ஸஹஸ்ராக்ஷஸ் ஸஹஸ்ரபாத் ॥

ஆவர்த்தநோ நிவ்ருத்தாத்மா ஸம்வ்ருதஸ் ஸம்ப்ரமர்தந: ।
அஹஸ்ஸம்வர்த்தகோ வஹ்நி ரநிலோ தரணீதர: ॥

ஸுப்ரஸாத: ப்ரஸந்நாத்மா விச்வத்ருக் விச்வபுக் விபு: ।
ஸத்கர்த்தா ஸத்க்ருதஸ் ஸாதுர் ஜஹ்நுர் நாராயணோ நர: ॥

அஸங்க்யேயோ: ப்ரமேயாத்மா விஶிஸ்ட: ஶிஷ்டக்ருத் சுசி: ।
ஸித்தார்த்தஸ் ஸித்தஸங்கல்பஸ் ஸித்திதஸ் ஸித்திஸாதந: ॥

வ்ருஷாஹீ வ்ருஷபோ விஷ்ணுர் வ்ருஷபர்வா வ்ருஷோதர: ।
வர்த்தநோ வர்த்தமாநஸ்ச விவிக்தஸ் ச்ருதிஸாகர: ॥

ஸுபுஜோ துர்த்தரோ வாக்மீ மஹேந்த்ரோ வஸுதோ வஸு: ।
நைகரூபோ ப்ருஹத்ரூபஸ் ஶிபிவிஷ்ட: ப்ரகாஶந: ॥

ஓஜஸ்தேஜோத்யுதிதர: ப்ரகாஶாத்மா ப்ரதாபந: ।
ரித்தஸ் ஸ்பஷ்டாக்ஷரோ மந்ரஸ் சந்ராம்ஸு பாஸ்கரத்யுதி: ॥

அம்ருதாம்ஶூத்பவோ பாநு: ஶஶபிந்துஸ் ஸுரேச்வர: ।
ஔஷதஸ் ஜகதஸ்ஸேது: ஸத்யதர்ம பராக்ரம: ॥

பூதபவ்ய பவந்நாத: பவந பாவநோநல: ।
காமஹா காமக்ருத் காந்த: காம: காமப்ரத ப்ரபு: ॥

யுகாதிக்ருத் யுகாவர்த்தோ நைகமாயோ மஹாஶந: ।
அத்ரு[illegible]வ்யக்தரூபஸ்ச ஸஹஸ்ரஜிதநந்தஜித்: ॥

இஷ்டோவிஶிஷ்டஸ் ஶிஷ்டேஷ்ட:
ஶிகண்டீ நஹுஷோ வ்ருஷ: ।
க்ரோதஹா க்ரோதக்ருத் கர்த்தா
விச்வபாஹுர் மஹீதர: ॥

அச்யுத: ப்ரதித: ப்ராண: ப்ராணதோ வாஸவாநுஜ: ।
அபாந்நிதி ரதிஷ்டாந மப்ரமத்த: ப்ரதிஷ்டித: ॥

ஸ்கந்தஸ் ஸ்கந்ததரோ துர்யோ வரதோ வாயுவாஹந: ।
வாஸுதேவோ ப்ருஹத்பாநு: ஆதி தேவ: புரந்தர: ॥

அஶோகஸ் தாரணஸ் தாரஸ் ஶூரஸ்ஶௌரிர் ஜநேச்வர: ।
அநுகூலஸ் ஶதாவர்த்த: பத்மீ பத்ம நிபேக்ஷண: ॥

பத்மநாபோऽரவிந்தாக்ஷ: பத்மகர்ப்பஸ் ஶரீரப்ருத் ।
மஹர்த்திர் ரித்தோ வ்ருத்தாத்மா மஹாக்ஷோ கருடத்வஜ: ॥

அதுலஸ் ஶரபோ பீமஸ் ஸமயஜ்ஞோ ஹவிர்ஹரி: ।
ஸர்வலக்ஷண லக்ஷண்யோ லக்ஷ்மீவாந் ஸமிதிஞ்ஜய: ॥

விக்ஷரோ ரோஹிதோ மார்கோ ஹேதுர் தாமோதரஸ்ஸஹ: ।
மஹீதரோ மஹாபாகோ வேகவாநமிதாஶந: ॥

உத்பவ: க்ஷோபணோ தேவஸ் ஸ்ரீகர்ப்ப: பரமேச்வர: ।
கரணம் காரணம் கர்த்தா விகர்த்தா கஹநோ குஹ: ॥

வ்யவஸாயோ வ்யவஸ்தாநஸ் ஸம்ஸ்தாநஸ் ஸ்தாநதோ த்ருவ: ।
பரர்த்தி: பரமஸ்பஷ்டஸ் துஷ்ட: புஷ்டஸ் ஶுபேக்ஷண: ॥

ராமோ விராமோ விரதோ மார்கோ நேயோ நயோऽநய: ।
வீரஸ் ஶக்திமதாம் ச்ரேஷ்டோ தர்மோ தர்மவிதுத்தம: ॥

வைகுண்ட: புருஷ: ப்ராண: ப்ராணத: ப்ரணவ: ப்ருது: ।
ஹிரண்யகர்ப்ப: ஶத்ருக்நோ வ்யாப்தோ வாயுரதோக்ஷஜ: ॥

ருதுஸ் ஸுதர்ஶந: கால: பரமேஷ்டீ பரிக்ரஹ: ।
உக்ரஸ் ஸம்வத்ஸரோ தக்ஷோ விச்ராமோ விச்வதக்ஷிண: ॥

விஸ்தாரஸ் ஸ்தாவரஸ்தாணு: ப்ரமாணம் பீஜமவ்யயம் ।
அர்த்தோऽநர்த்தோ மஹாகோஶோ மஹாபோகோ மஹாதந: ॥

அநிர்விண்ணஸ் ஸ்தவிஷ்டோ பூர் தர்மயூபோ மஹாமக: ।
நக்ஷத்ரநேமிர் நக்ஷத்ரீ க்ஷம: க்ஷாமஸ் ஸமீஹந: ॥

யஜ்ஞ இஜ்யோ மஹேஜ்யஸ்ச
க்ரதுஸ் ஸத்ரம் ஸதாம் கதி: ।
ஸர்வதர்ஸி நிவ்ருத்தாத்மா
ஸர்வஜ்ஞோ ஜ்ஞாநமுத்தமம் ॥

ஸுவ்ரதஸ் ஸுமுகஸ் ஸூக்ஷ்மஸ் ஸுகோஷஸ் ஸுகதஸ் ஸுஹ்ருத் ।
மநோஹரோ ஜிதக்ரோதோ வீரபாஹுர் விதாரண: ॥

ஸ்வாபந: ஸ்வவஶோ வ்யாபீ நைகாத்மா நைக்கர்மக்ருத் ।
வத்ஸரோ வத்ஸலோ வத்ஸீ ரத்நகர்ப்போ தநேச்வர: ॥

தர்மகுப் தர்மக்ருத் தர்மீ ஸதஸத்க்ஷரமக்ஷரம் ।
அவிஜ்ஞா தா ஸஹஸ்ராம்ஶுர் விதாதா க்ருதலக்ஷண: ॥

கபஸ்திநேமிஸ் ஸத்வஸ்தஸ் ஸிம்ஹோ பூதமஹேச்வர: ।
ஆதி தேவோ மஹாதேவோ தேவேஶோ தேவப்ருத் குரு: ॥

உத்தரோ கோபதிர் கோப்தா ஜ்ஞாநகம்ய புராதந: ।
ஶரீரபூதப்ருத் போக்தா கபீந்த்ரோ பூரிதக்ஷிண: ॥

ஸோமபோ அம்ருதபஸ் ஸோம: புருஜித் புருஸத்தம: ।
விநயோ ஜயஸ் ஸத்யஸந்தோ தாஶார்ஹஸ் ஸாத்வதாம் பதி: ॥

ஜீவோ விநயிதா ஸாக்ஷீ முகுந்தோ அமிதவிக்ரம: ।
அம்போநிதி ரநந்தாத்மா மஹோததிஶயோऽந்தக: ॥

அஜோ மஹார்ஹஸ் ஸ்வாபாவ்யோ ஜிதாமித்ர: ப்ரமோதந: ।
ஆநந்தோ நந்தநோ நந்தஸ் ஸத்யதர்மா த்ரிவிக்ரம: ॥

மஹிர்ஷி: கபிலாசார்ய: க்ருதஜ்ஞோ மேதிநீபதி: ।
த்ரிபதஸ் த்ரிதஶாத்யக்ஷோ மஹாச்ருங்க: க்ருதாந்தக்ருத் ॥

மஹாவராஹோ கோவிந்தஸ் ஸுஷேண: கநகாங்கதீ ।
குஹ்யோ கபீரோ கஹநோ குப்தஸ் சக்ரகதாதர: ॥

வேதாஸ் ஸ்வாங்கோ ஜித: க்ஷ்ணோ த்ருடஸ் ஸங்கர்ஷணோऽச்யுத: ।
வருணோ வாருணோ வ்ருக்ஷ: புஷ்கராக்ஷோ மஹாமந: ॥

பகவாந் பகஹாநந்தீ வநமாலீ ஹலாயுத: ।
ஆதித்யோ ஜ்யோதிராதித்யஸ் ஸஹிஷ்ணுர் கதிஸத்தம: ॥

ஸுதந்வா கண்டபரஶுர் தாருணோ த்ரவிணப்ரத: ।
திவிஸ்ப்ருக் ஸர்வத்ருக் வ்யாஸோ வாசஸ்பதி: ரயோநிஜ: ॥

த்ரிஸாமா ஸாமகஸ்ஸாம நிர்வாணம் பேஷஜம் பிஷக் ।
ஸந்யாஸக்ருத் ஶமஸ் ஶாந்தோ நிஷ்டா ஶாந்தி பராயணம் ॥

ஶுபாங்கஸ் ஶாந்திதஸ் ஸ்ரஷ்டா: குமுத: குவலேஶய: |
கோஹிதோ கோபதிர் கோப்தா வ்ருஷபாக்ஷோ வ்ருஷப்ரிய: ||

அநிவர்த்தி நிவ்ருத்தாத்மா ஸம்க்ஷேப்தா க்ஷேமக்ருச்சிவ: |
ஸ்ரீவத்ஸவக்ஷா: ஸ்ரீவாஸ: ஸ்ரீபதி: ஸ்ரீமதாம் வர: ||

ஸ்ரீத: ஸ்ரீஶ: ஸ்ரீநிவாஸ: ஸ்ரீநிதி: ஸ்ரீவிபாவந: |
ஸ்ரீதர ஸ்ரீகரஸ் ச்ரேய: ஸ்ரீமாந் லோகாத்ரயாச்ரய: ||

ஸ்வக்ஷஸ் ஸ்வங்கஸ் ஸதாநந்தோ நந்திர் ஜ்யோதிர் கணேச்வர: |
விஜிதாத்மா விதேயாத்மா ஸத்கீர்த்திஸ் ச்சிந்நஸம்ஸய: ||

உதீர்ணஸ் ஸர்வதஸ்சக்ஷு ரநீஶஸ் ஶாச்வத: ஸ்திர: |
பூஷயோ பூஷணோ பூதிர் விஶோகஸ் ஶோகநாஶந: ||

அர்ச்சிஷ்மா நர்ச்சித: கும்போ விஶுத்தாத்மா விஶோதந: |
அநிருத்தோ அப்ரதிரத: ப்ரத்யும்நோ அமிதவிக்ரம: ||

காலநேமிநிஹா ஶௌரி ஶூரஸ் ஶூரஜநேச்வர: |
த்ரிலோகாத்மா த்ரிலோகேஶ: கேஶவ: கேஶிஹாஹரி: ||

காமதேவ: காமபால: காமீ காந்த: க்ருதாகம: |
அநிர்தேச்யவபுர் விஷ்ணுர் வீரோ஽நந்தோ தநஞ்ஜய: ||

ப்ரஹ்மண்யோ ப்ரஹ்மக்ருத் ப்ரஹ்மா ப்ரஹ்ம ப்ரஹ்ம விவர்தந: |
ப்ரஹமவித் ப்ராஹ்மணோ ப்ரஹ்மீ ப்ரஹ்மஜ்ஞோ ப்ராஹ்மணப்ரிய: ||

மஹாக்ரமோ மஹாகர்மா மஹாதேஜா மஹோரக: |
மஹாக்ரதுர் மஹாயஜ்வா மஹாயஜ்ஞோ மஹாஹவி: ||

ஸ்தவ்யஸ் ஸ்தவப்ரியஸ் ஸ்தோத்ரம் ஸ்துதஸ் ஸ்தோதா ரணப்ரிய: |
பூர்ண: பூரயிதா புண்ய: புண்யகீர்த்தி ரநாமய: ||

மநோஜவஸ் தீர்த்தகரோ வஸுரேதா வஸுப்ரத: |
வஸுப்ரதோ வாஸுதேவோ வஸுர் வஸுமநா ஹவி: ||

ஸத்கதிஸ் ஸத்க்ருதிஸ் ஸத்தா ஸத்பூதிஸ் ஸத்பராயண: |
ஶூரஸேநோ யதுச்ரேஷ்டஸ் ஸந்நிவாஸஸ் ஸுயாமுந: ||

பூதாவாஸோ வாஸுதேவஸ் ஸர்வாஸுநிலயோ (அ)நல: ।
தர்ப்பஹா தர்ப்பதோ (அ)த்ருப்தோ துர்தரோ(அ)தா பராஜித: ॥

விச்வமூர்த்திர் மஹாமூர்த்தீர் தீப்தமூர்த்தி ரமூர்த்திமாந் ।
அநேக மூர்த்தி ரவ்யக்தஸ் ஸதமூர்த்திஸ் ஶதாநந: ॥

ஏகோநைகஸ் ஸவ: க: கிம் யத்தத் பதமநுத்தமம் ।
லோகபந்துர் லோகநாதோ மாதவோ பக்தவத்ஸல: ॥

ஸுவர்ணவர்ணோ ஹேமாங்கோ வராங்கஸ் சந்தநாங்கதி ।
வீரஹா விஷமஸ் ஶூந்யோ க்ருதாஸீரசலஸ்சல: ॥

அமாநீ மாநதோ மாந்யோ லோகஸ்வாமீ த்ரிலோக த்ருக் ।
ஸுமேதா மேதஜோ தந்யஸ் ஸத்யமேதா தராதர: ॥

தேஜோவ்ருஷோ த்யுதிதரஸ் ஸர்வஶஸ்த்ரப்ருதாம் வர: ।
ப்ரக்ரஹோ நிக்ரஹோ வ்யக்ரோ நைகச்ருங்கோ கதாக்ரஜ: ॥

சதுர்மூர்த்திச் சதுர்பாஹுஸ் சதுர்வ்யூஹஸ் சதுர்கதி: ।
சதுராத்மா சதுர்ப்பாவஸ் சதுர்வேதவிதேகபாத் ॥

ஸமாவர்த்தோ நிவ்ருத்தாத்மா துர்ஜயோ துரதிக்ரம: ।
துர்லபோ துர்கமோ துர்கோ துராவாஸோ துராரிஹா ॥

ஸுபாங்கோ லோகஸாரங்க: ஸுதந்துஸ் தந்துவர்த்தந: ।
இந்த்ரகர்மா மஹாகர்மா க்ருதகர்மா க்ருதாகம: ॥

உத்பவஸ் ஸுந்தரஸ் ஸுந்தோ ரத்நநாபஸ் ஸுலோசந: ।
அர்க்கோ வாஜஸநஸ் ச்ருங்கீ ஜயந்தஸ் ஸர்வவிஜ்ஜயீ ॥

ஸுவர்ணபிந்து ரக்ஷோப்யஸ் ஸர்வ வாகீச்வரேச்வர: ।
மஹாஹ்ரதோ மஹாகர்த்தோ மஹாபூதோ மஹாநிதி: ॥

குமுத: குந்தர: குந்த: பர்ஜந்ய: பவநோ (அ)நில: ।
அம்ருதாஶோ(அ)ம்ருதவபுஸ் ஸர்வஜ்ஞஸ் ஸர்வதோமுக: ॥

ஸுலபஸ் ஸுவ்ரதஸ் ஸித்தஸ் ஶத்ருஜித் சத்ருதாபந: ।
ந்யக்ரோதோ தும்ப்ரோச்வத்தஸ் சாணூராந்த்ரநிஷூதந: ॥

ஸஹஸ்ரார்ச்சி: ஸப்தஜிஹ்வஸ் ஸப்தைதாஸ் ஸப்த வாஹந: ।
அமூர்த்தி ரநகோऽசிந்த்யோ பயக்ருத் பயநாஶந: ॥

அணுர்ப்ருஹத் க்ருஶஸ் ஸ்தூலோ குணப்ருந் நிர்குணோ மஹாந் ।
அத்ருதஸ் ஸ்வத்ருதஸ் ஸ்வாஸ்ய: ப்ராக்வம்ஶோ வம்ஶவர்த்தந: ॥

பாரப்ருத் கதிதோ யோகீ யோகீஶஸ் ஸர்வகாமத: ।
ஆச்ரமஸ் ச்ரமண: க்ஷாமஸ் ஸுபர்ணோ வாயுவாஹந: ॥

தநுர்த்தரோ தநுர்வேதோ தண்டோ தமயிதாऽதம: ।
அபராஜிதஸ் ஸர்வஸஹோ நியந்தா நியமோயம: ॥

ஸத்வவாந் ஸாத்விக: ஸத்ய: ஸத்யதர்மபராயண: ।
அபிப்ராய: ப்ரியார்ஹோऽர்ஹ: ப்ரியக்ருத் ப்ரீதிவர்த்தந: ॥

விஹாய ஸகதிர் ஜ்யோதி: ஸுருசிர் ஹுதபுக் விபு: ।
ரவிர் விரோசநஸ் ஸூர்யஸ் ஸவிதா ரவிலோசந: ॥

அநந்தஹுதபுக் போக்தா ஸுகதோ நைகதோऽக்ரஜ: ।
அநிர்விண்ணஸ் ஸதாமர்ஷீ லோகாதிஷ்டாந மத்புத: ॥

ஸநாத் ஸநாதந தம: கபில: கபி ரவ்யய: ।
ஸ்வஸ்திதஸ் ஸ்வஸ்திக்ருத் ஸ்வஸ்தீ ஸ்வஸ்திபுக் ஸ்வஸ்தி தக்ஷிண: ॥

அரௌத்ர: குண்டலீ சக்ரீ விக்ரம்யூர்ஜித ஶாஸந: ।
ஸப்தாதிக: ஸப்தஸஹ: ஶிஶிரஸ் ஶர்வரீகர: ॥

அக்ரூர: பேஶலோ தக்ஷோ தக்ஷிண: க்ஷமிணாம் வர: ।
வித்வத்தம: வீதபய: புண்யச்ரவண கீர்த்தந: ॥

உத்தாரணோ துஷ்க்ருதிஹா புண்யோ துஸ்ஸ்வப்ந நாஶந: ।
வீரஹா ரக்ஷணஸ்ஸந்தோ ஜீவந: பர்யவஸ்தித: ॥

அநந்தரூபோऽநந்தஶ்ரீர் ஜிதமந்யு: பயாபஹ: ।
சதுரச்ரோ கபீராத்மா விதிஶோ வ்யாதிஶோ திஶ: ॥

அநாதிர் பூர்புவோ லக்ஷ்மீஸ் ஸுவீரோ ருசிராங்கத: ।
ஜநநோ ஜநஜந்மாதிர் பீமோ பீமபராக்ரம: ॥

ஆதாரநிலயோ தாதா புஷ்பஹாஸ: ப்ரஜாகர: ।
ஊர்த்வகஸ் ஸத்பதாசார: ப்ராணத: ப்ரணவ: பண: ॥

ப்ரமாணம் ப்ராணநிலய: ப்ராணப்ருத் ப்ராண ஜீவந: ।
தத்வம் தத்வ விதேகாத்மா ஜந்ம ம்ருத்யுஜராதிக: ॥

பூர்புவ: ஸ்வஸ்தருஸ்தாரஸ் ஸவிதா ப்ரபிதாமஹ: ।
யஜ்ஞோ யஜ்ஞபதிர் யஜ்வா யஜ்ஞாங்கோ யஜ்ஞவாஹந: ॥

யஜ்ஞப்ருத் யஜ்ஞக்ருத் யஜ்ஞீ யஜ்ஞபுக் யஜ்ஞஸாதந: ।
யஜ்ஞாந்தக்ருத் யஜ்ஞகுஹ்யம் அந்நமந்நாத ஏவ ச ॥

ஆத்மயோநிஸ் ஸ்வயஞ்ஜாதோ வைகாநஸ் ஸாமகாயந: ।
தேவகீநந்தநஸ் ஸ்ரஷ்டா க்ஷிதீஶ: பாபநாஶந: ॥

ஶங்கப்ருந் நந்தகீ சக்ரீஶார்ங்கதந்வா கதாதர: ।
ரதாங்கபாணி ரக்ஷோப்யஸ் ஸர்வப்ரஹரணாயுத: ॥
ஸ்ரீ ஸர்வ ப்ரஹரணாயுத ஓம் நம இதி

வநமாலீ கதீ ஶார்ங்கீ ஶங்கீ சக்ரீ ச நந்தகீ ।
ஸ்ரீமாந் நாராயணோ விஷ்ணுர் வாஸுதேவோऽபிரக்ஷது ॥
ஸ்ரீ வாஸுதேவோ அபிரக்ஷதத்வோம் நம இதி

இதீதம் கீர்த்தனஸ்ய கேஶவஸ்ய மஹாத்மந: ।
நாம்நாம் ஸஹஸ்ரம் திவ்யாநாம் அஶேஷண ப்ரகீர்த்திதம் ॥

ய: இதம் ச்ருணுயாந்நித்யம் யச்சாபி பரிகீர்த்தயேத் ।
நாஶுபம் ப்ராப்நுயாத் கிஞ்சித் ஸோऽமுத்ரேஹ ச மாநவ: ॥

வேதாந்தகோ ப்ராஹ்மணஸ் ஸ்யாத் க்ஷத்ரியோ விஜயீ பவேத் ।
வைச்யோ தநஸம்ருத்தஸ் ஸ்யாத் ஶூத்ரஸ் ஸுக மவாப்நுயாத் ॥

தர்மார்த்தீ ப்ராப்நுயாத் தர்மம் அர்த்தார்த்தீ சார்த்த மாப்நுயாத் ।
காமாநவாப்நுயாத் காமீ ப்ரஜார்த்தீ ப்ராப்நுயாத் ப்ரஜா: ॥

பக்திமாந் யஸ் ஸ்தோத்தாய ஶுசிஸ் தத்கதமாநஸ: ।
ஸஹஸ்ரம் வாஸுதேவஸ்ய நாம்நாமேதத் ப்ரகீர்த்தயேத் ॥

யஶ: ப்ராப்நோதி விபுலம் ஜ்ஞாதி ப்ராதாந்யமேவ ச।
அசலாம் ச்ரிய மாப்நோதி ச்ரேய: ப்ராப்நோத்ய நுத்தமம் ॥

ந பயம் க்வசிதாப்நோதி வீர்யம் தேஜஸ்ச விந்ததி।
பவத்யரோகோ த்யுதிமாந் பலரூப குணாந்வித: ॥

ரோகார்த்தோ முச்யதே ரோகாத் பத்தோ முச்யேத பந்தநாத்।
பயாந் முச்யேத பீதஸ்து முச்யேதாபந்ந ஆபத: ॥

துர்காண்யதிதரத்யாஶு புருஷ புருஷோத்தமம்।
ஸ்துவந் நாமஸஹஸ்ரேண நித்யம் பக்தி ஸமந்வித: ॥

வாஸுதேவாச்ரயோ மர்த்யோ வாஸுதேவ பராயண:।
ஸர்வபாப விஶுத்தாத்மா யாதி ப்ரஹ்ம ஸநாதநம் ॥

ந வாஸுதேவ பக்தாநாம் அஶுபம் வித்யதே க்வசித்।
ஜந்ம ம்ருத்யு ஜராவ்யாதி பயம் நைவோபஜாயதே ॥

இமம் ஸ்தவ மதீயாந: ச்ரத்தாபக்தி ஸமந்வித:।
யுஜ்யேதாத்மா ஸுகக்ஷாந்தி ஶ்ரீத்ருதி ஸ்ம்ருதி கீர்த்திபி: ॥

ந க்ரோதோ ந ச மாத்ஸர்யம் ந லோபோ நாஶுபா மதி:।
பவந்தி க்ருதபுண்யாநாம் பக்தாநாம் புருஷோத்தமே ॥

த்யௌஸ் ஸசந்த்ரார்க்க நக்ஷத்ரா கம் திஶோ பூர்மஹோததி।
வாஸுதேவஸ்ய வீர்யேண வித்ருதாநி மஹாத்மந: ॥

ஸஸுராஸுரகந்தர்வம் ஸயக்ஷோரக ராக்ஷஸம்।
ஜகத் வஶே வர்த்ததேதம் க்ருஷ்ணஸ்ய ஸசராசரம் ॥

இந்த்ரியாணி மநோ புத்திஸ் ஸத்வம் தேஜோ பலம் த்ருதி:।
வாஸுதேவாத்மகாந்யாஹு: க்ஷேத்ரம் க்ஷேத்ரஜ்ஞ ஏவ ச ॥

ஸர்வாகமாநாமாசார: ப்ரதமம் பரிகல்பித:।
ஆசார ப்ரதமோ தர்மோ தர்மஸ்ய ப்ரபுச்ரயுத: ॥

ரிஷய: பிதரோ தேவா மஹாபூதாநி தாதவ:।
ஜங்கமாஜங்கமஞ் சேதம் ஜகந்நாராயணோத்பவம் ॥

யோகோ ஜ்ஞாநம் ததா ஸாங்க்யம் வித்யாஸ் ஶில்பாதி கர்ம ச।
வேதாஸ் ஶாஸ்த்ராணி விஜ்ஞாநம் ஏதத் ஸர்வம் ஜநார்தநாத் ॥

ஏகோ விஷ்ணுர் மஹத்பூதம் ப்ருதக்பூதாந்யநேகஶ:।
த்ரீந் லோகாந் வ்யாப்ய பூதாத்மா புங்க்தே விச்வபுகவ்யய: ॥

இமம் ஸ்தவம் பகவதோ விஷ்ணோர் வ்யாஸேந கீர்த்திதம்।
படேத்ய இச்சேத் புருஷ: ச்ரேய ப்ராப்தும் ஸுகாநி ச ॥

விச்வேச்வர மஜம் தேவம் ஜகத: ப்ரபவாப்யயம்।
பஜந்தி யே புஷ்கராக்ஷம் ந தே யாந்தி பராபவம் ॥
ந தே யாந்தி பராபவ ஓம் நம இதி

அர்ஜுந உவாச –
பத்மபத்ர விஶாலாக்ஷ பத்மநாப ஸுரோத்தம।
பக்தாந மநுரக்தாநாம் த்ராதா பவ ஜநார் தந ॥

ஶ்ரீ பகவாநுவாச –
யோ மாம் நாமஸஹஸ்ரேண ஸ்தோதுமிச்சதி பாண்டவ।
ஸோऽஹமேகேந ச்லோகேந ஸ்துத ஏவ ந ஸம்ஶய ॥
ஸ்துத ஏவ ந ஸம்ஶய ஓம் நம இதி

வ்யாஸ உவாச –
வாஸநாத் வாஸுதேவஸ்ய வாஸிதம் தே ஜகத் த்ரயம்।
ஸர்வபூத நிவாஸோऽஸி வாஸுதேவ நமோऽஸ்து தே ॥
ஶ்ரீ வாஸுதேவ நமோऽஸ்து த ஓம் நம இதி

பார்வத்யுவாச –
கே நோபாயேந லகுநா விஷ்ணோர் நாம ஸஹஸ்ரகம்।
பட்யதே பண்டிதைர் நித்யம் ச்ரோதுமிச்சாம்யஹம் ப்ரபோ ॥

ஈச்வர உவாச –
ஶ்ரீராம ராம ராமேதி ரமே ராமே மநோரமே।
ஸஹஸ்ரநாம தத்துல்யம் ராமநாம வராநநே ॥
ஶ்ரீராமநாம வராநந ஓம் நம இதி

ப்ரஹ்மோவாச –
நமோஸ்த்வநந்தாய ஸஹஸ்ரமூர்த்தயே
ஸஹஸ்ர பாதாக்ஷி ஶிரோரு பாஹவே।
ஸஹஸ்ரநாம்நே புருஷாய ஶாச்வதே
ஸஹஸ்ரகோடி யுகதாரிணே நம ஓம் நம இதி॥

ஸஞ்ஜய உவாச –
யத்ர யோகேச்வர: க்ருஷ்ணோ யத்ர பார்த்தோ தநுர்தர।
தத்ர ஶ்ரீர் விஜயோ பூதி: த்ருவா நீதிர் மதிர் மம॥

ஶ்ரீ பகவாந் உவாச –
அநந்யாஸ் சிந்தயந்தோ மாம் யே ஜநா: பர்யுபாஸதே।
தேஷாம் நித்யாபியுக்தாநாம் யோகக்ஷேமம் வஹாம்யஹம்॥

பரித்ராணாய ஸாதூநாம் விநாஶாய ச துஷ்க்ருதாம்।
தர்ம ஸம்ஸ்தாபநார்த்தாய ஸம்பவாமி யுகே யுகே॥

ஆர்த்தா விஷண்ணா: ஶிதிலாஸ்ச பீதா:
கோரேஷு ச வ்யாதிஷு வர்த்தமாநா:।
ஸங்கீர்த்ய நாராயண ஶப்தமாத்ரம்
விமுக்த துக்காஸ் ஸுகிநோ பவந்து॥

ஆபதாமபஹர்த்தாரம் தாதாரம் ஸர்வஸம்பதாம்।
லோகாபிராமம் ஶ்ரீராமம் பூயோபூயோ நமாம்யஹம்॥

ஆர்த்தாநாமார்த்திஹந்தாரம் பீதாநாம் பீதிநாஶநம்।
த்விஷதாம் காலதண்டம் தம் ராமச்சந்த்ரம் நமாம்யஹம்॥

நம கோதண்ட ஹஸ்தாய ஸந்தீக்ருதஶராயச।
கண்டிதாऽகில தைத்யாய ராமாயாऽऽபந்நிவாரிணே॥

ராமாய ராமபத்ராய ராமசந்த்ராய வேதஸே।
ரகுநாதாய நாதாய ஸீதாயா: பதயே நம:॥

அக்ரத: ப்ருஷ்டதஸ்சைவ பார்ஸ்வதஸ்ச மஹாபலௌ।
ஆகர்ணபூர்ண தந்வாநௌ ரக்ஷேதாம் ராம லக்ஷ்மணௌ॥

ஸந்நத்த: கவசீ கட்கீ சாப பாணதரோ யுவா।
கச்சந் மமாக்ரதோ நித்யம் ராம: பாது ஸலக்ஷ்மண: ॥

அச்யுதாநந்த கோவிந்த நாமோச்சாரண பேஷஜாத்।
நஶ்யந்தி ஸ்கலா ரோகா: ஸத்யம் ஸத்யம் வதாம்யஹம் ॥

ஸத்யம் ஸத்யம் புந: ஸத்யமுத்ருத்ய புஜமுச்யதே।
வேதாச்சாஸ்த்ரம் பரம் நாஸ்தி ந தைவம் கேசவாத்பரம் ॥

சரீரே ஜர்ஜரீபூதே வ்யாதிக்ரஸ்தே களேபரே।
ஔஷதம் ஜாஹ்நவீதோயம் வைத்யோ நாராயணோ ஹரி: ॥

ஆலோட்ய ஸர்வசாஸ்த்ராணி விசார்யச புந: புந: ।
இதமேகம் ஸுநிஷ்பந்தம் த்யேயோ நாராயணோ ஹரி: ॥

காயேந வாசா மனஸேந்த்ரியைர்யவா
புத்யாऽऽத்மநா வா ப்ரக்ருதே ஸ்வபாவாத்।

கரோமி யத்தத் ஸகலம் பரஸ்மை
நாராயணாயேதி ஸமர்ப்பயாமி ॥

யதக்ஷர பதப்ரஷ்டம் மாத்ராஹீனந் து யத்பவேத்।
தத்ஸர்வம் க்ஷம்யதாம் தேவ! நாராயண! நமோऽஸ்துதே ॥

விஸர்க பிந்துமாத்ராணி பதபாதக்ஷராணி ச।
ந்யூநாநி சாऽதிரிக்தாநி க்ஷமஸ்வ புருஷோத்தம ॥

ஶுபமஸ்து

ஶ்ரீ:

# பஞ்சாயுத ஸ்தோத்ரம்

ஸ்புரத் ஸஹஸ்ரார ஶிகாதி தீவ்ரம்
ஸுதர்ஶநம் பாஸ்கர கோடி துல்யம்
ஸுரத்விஷாம்ப்ராண விநாஶி விஷ்ணோ:
சக்ரம்ஸதாऽஹம் ஶரணம் ப்ரபத்யே

விஷ்ணோர் முகோத்தாऽநில பூரிதஸ்ய
யஸ்ய த்வநிர் தாநவ தர்ப்பஹந்தா
தம் பாஞ்சஜந்யம் ஶஶிகோடி ஶுப்ரம்
ஶங்கம் ஸதாऽஹம் ஶரணம் ப்ரபத்யே

ஹிரண்மயீம் மேரு ஸமாந ஸாராம்
கௌமோதகீம் தைத்ய குலைகஹந்த்ரீம்
வைகுண்டவாமாக்ர கராபிம்ருஷ்டாம்
கதாம்ஸதாऽஹம் ஶரணம் ப்ரபத்யே

ரக்ஷோ ஸுராணாம் கடிநோக்ரகண்டச்
சேதக்ஷரத்சோணித திக்ததாரம்
தம் நந்தகம் நாம ஹரே: ப்தீப்தம்
கட்கம் ஸதாऽஹம் ஶரணம் ப்ரபத்யே

யஜ்ஜ்யாநிநாத ஶ்ரவணாத் ஸுராணாம்
சேதாம்ஸி நிர்முக்த பயாநி ஸத்ய:
பவந்தி தைத்யாநிபாணவர்ஷி
ஶார்ங்கம் ஸதாऽஹம் ஶரணம் ப்ரபத்யே

இமம் ஹரே: பஞ்சமஹாயுதாநாம்
ஸ்தவம் படேத்யோऽநுதினம் ப்ரபாதே
ஸமஸ்த துக்காநி பயாநி ஸத்ய:
பாபாநி நஶ்யந்தி ஸுகாநி ஸந்தி

வநே ரணே சத்ருஜலாக்நிமத்யே
யத்ருச்சயாऽபத்ஸு மஹாபயேஷு
இதம்படந் ஸ்தோத்ரம் அநாகுலாத்மா
ஸுகீபவேத் தத்க்ருத ஸர்வ ரக்ஷ:

பஞ்சாயுத ஸ்தோத்ரம் ஸம்பூர்ணம்

* * *

## த்வாதஶநாம பஞ்ஜரம்

புரஸ்தாத் கேஶவ:பாது சக்ரீ ஜாம்பூநதப்ரப:
பஸ்சாந் நாராயண: ஶங்கி நீலஜீமூத ஸந்நிப:

இந்தீவரதளச்யாமோ மாதவோர்த்வம் கதாதர:
கோவிந்தோ தக்ஷிணே பார்ஶ்வே தந்வீ சந்தரப்ரபோ மஹான்

உத்தரே ஹலப்ருத் விஷ்ணு: பத்மகிஞ்ஜல்க ஸந்நிப:
ஆக்நேய்யாம் அரவிந்தாபோ முஸலீ மதுஸூதந:

த்ரவிக்ரம: கட்கபாணிர் நிர்ருத்யாம் ஜ்வலநப்ரப:
வாயவ்யாம் வாமநோ வஜ்ரீ தருணாதித்ய தீப்திமாந்

திருத்துழாயும் மகிழம் பூவும் கமழ்கின்ற முத்தால் க்ரீடமும்
நெற்றியில் திகழ்கின்ற கஸ்தூரி திலகமும்
மரகத வில்லும் போல வளைந்த புருவமும்
குளிர்ந்த திருமேனி தேஜஸாய் இருக்கிற
என்னப்பனே ரங்கனே, ரங்கநாதனே, தாமரை பூ கண்ணனே
கஸ்தூரி நாமத்தானே, கரிய குழல் மேகத்தானே
வேயுங் குழலூதும் ஐயன் பெருமானே
சங்கு சக்ரமும் சார்ங்க வில்லும்
கத்தி கேடயம் கதையும் தரித்தோனே
பீதக வாடையுடையோனே
பதினாலு லோகம் ஆண்டோனே
சங்கம் எடுத்தானே ச்ரமாரி காத்தோனே
ஆனிறை மேய்த்தானே ஐயன் பெருமானே
ரங்கநாதர் திருவடிகளே
சரணம் சரணம் சரணம்

இலவச வெளியீடு
ப்ராக்ரஸிவ் ஏஜென்சீஸ், சென்னை 600 017.